स्वभावविजयो भवेद्वदति वल्लभः श्रीहरेः ॥ ९ ॥

श्रीमद्वैश्वानरावतारश्रीमद्वल्लभाचार्यचरणविरचितं
श्रीयमुनाष्टकस्तोत्रं सम्पूर्णम्।

वोऽप्युत्तमस्वभावो भवतीत्यर्थः। नन्विदमनेकतपःसाध्यं कथमेतत्पाठमात्रा-दिति चेत्तत्राऽऽहुर्वदति वल्लभ इति। तेनाऽऽप्तवाक्यत्वेन प्रामाण्यमुक्तम्। नन्वितः पूर्वं केनाऽप्यनुक्तत्वाद्भवदुक्तिमात्रेण कथं प्रामाण्यमिति चेत्तत्राऽऽहुः श्रीहरेरिति। साक्षाच्छ्रीपुरुषोत्तमसम्बन्धी यतः, अहमतो वदामीत्यर्थः। अत्राऽयमाशयः। साक्षात्स्वरूपसम्बन्धिनां स्वरूपं साक्षात्तत्सम्बन्धिन एव जानन्ति न त्वन्ये। श्रीकालिन्द्याः साक्षात्तत्सम्बन्धित्वं पूर्वं प्रकटमेवोपपादितम्। स्वातिरिक्तानां साक्षाच्छ्रीगोकुलेशसम्बन्धाभावात्साक्षात्तत्सम्बन्धिन्याः स्वरूपाज्ञानात्तदकथनम्। स्वस्य तु साक्षात्तादृशत्वात्तत्स्वरूपज्ञाना-त्तत्कथनमिति नाऽनुपपत्तिः काचित्।

इति श्रीविठ्ठलेश्वरविरचिता श्रीयमुनाष्टकविवृतिः सम्पूर्णा।

गो० श्रीद्वारकेशचरणविरचितं टिप्पणम्।

पूर्त्तिर्भवति। स्तोत्रपठितुः 'कृष्णोऽहं पश्यत गतिमिति' श्लोकोक्तो मोक्षः सम्पद्यते। बाहिर्मुख्यनिवृत्तिपक्षे कर्मवासनानामनुद्भवो भवति। दुष्टस्वभाव इति। बहिर्मुख्यादिदोषग्रस्तोऽपि दैन्यभावसिद्ध्या सन्मुखो भवति। एतद्विषये प्रामाण्यं वक्तुमाशङ्कते नन्विदमिति। समादधते वदति वल्लभ इति, प्रियाः प्रियाभिप्रायं विज्ञायैव वदन्तीति भावः। तेनाप्तत्वेनेति। आप्तश्च यथादृष्टार्थवादी, तादृशास्त्वत्राचार्यचरणा एव। अन्येषामेतज्ज्ञानं नेति वक्तुं क्षिपन्ति नन्वित इति। श्रीहरेरिति श्रीभिः स्वामिनीभिर्युक्तस्य सर्वदुःखहर्तुः प्रियोऽहम्। यतो वदामि तेन तथैव। अग्रे स्पष्टम्। तथा हि, साक्षादिति श्रीयमुनाप्रभृतीनां सरश्रमे इत्याद्युक्तं रूपम्। साक्षात्तदिति श्रीमदाचार्या एव जानन्ति। स्वातिरिक्तानामिति, श्रीमदाचार्यपादाब्जामोदरहितानाम्। साक्षादित्यादि। (अभावादिति)। आवरणाच्छन्नस्वामिनीसहितगोकुलपतेरसम्बन्धात्। साक्षादिति श्रीयमुनायाः, तदिति एतादृक्प्रकारस्याकथनम्। स्वस्येति श्रीमदाचार्यरूपेण स्थितस्य साक्षादिति प्रकटतया, तादृशत्वादिति वस्तुतः कृष्णरूपत्वात्, तदिति 'सरश्रमे'त्याद्युक्तस्वरूपस्य-वर्णनमिति, न शङ्कालेश इति दिक्। मूलान्वयस्तु, हे सूरसुते! इदं तवाष्टकं यः सदा मुदा पठति, तस्य समस्तदुरितक्षयो भवति, वै मुकुन्दे रतिर्भवति, तया सकलसिद्धयो भवन्ति, मुररिपुश्च सन्तुष्यति, स्वभावविजयो भवेत्, श्रीहरेर्वल्लभो वदति।